## ॥ अथोपमाननिरूपणम् ॥

इदानीमुपमानं निरूप्यते । उपमितिकरणमुपमानम् । गृहे दृष्टगोपिण्डकस्य पुरुषस्य वने गवयेन्द्रियसंयोगे सति यज्ज्ञानम् 'अयं पिण्डो मद्गोसदृशः' इति तत् करणम् । तदनन्तरम् 'अनेन सदृशी मदीया गौः' इति यो निश्चयो जायते तत् गोनिष्ठगवयसादृश्यज्ञानं फलमुपमितिः । तच्च न प्रत्यक्षेण निर्वहति, तदानीं गोव्यक्तेरिन्द्रियासन्निकृष्टत्वात् । नाप्यनुमानेन, व्याप्तिज्ञानाद्यभावेऽपि तादृशप्रतीतेः संभवात् । उपमिनोमीति प्रतीतेर्विलक्षणत्वाच्च तस्याः प्रमित्यन्तरत्वम् ॥

॥ इत्युपमानम् ॥

---

## ॥ अथागमः ॥

सजातीयप्रमाणान्तराबाधिततात्पर्यविषयपदार्थसंसर्गबोधकवाक्यं प्रमाणशब्दः । सर्वेषां व्यावहारिकपदार्थानां ब्रह्मप्रमाबाध्यत्वात्सजातीयेति । 'घटमानय' 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादिलौकिकवैदिकवाक्येषु लक्षणसंगतिः । तदर्थघटानयन-यागस्वर्गसाध्यसाधनभावादिसंसर्गस्य पारमार्थिकतत्त्वावेदकवेदान्तवाक्यैर्बाधेऽपि व्यावहरिकतत्त्वावेदकप्रमाणैरबाधात् ॥

आकाङ्क्षा-योग्यताऽसत्ति-तात्पर्यज्ञानानि वाक्यार्थज्ञाने कारणानि । तत्र पदार्थानां परस्परजिज्ञासाविषयत्वयोग्यत्वमाकाङ्क्षा । सा च क्रियाकारकपदानाम् । क्रियाश्रवणे कारकस्य, कर्मादिकारकश्रवणे क्रियायाश्च जिज्ञासोदयात् । क्वचिज्जिज्ञासाविरहेऽपि बोधोदयात् योग्यत्वानुधावनम् । 'नीलमुत्पलं' 'तत्त्वमसि' इत्यादावभेदान्वयबोधानुरोधेनाभेदान्वयबोधे समानविभक्तिकत्वमित्याद्यूह्यम् । तात्पर्यविषयसंसर्गाबाधो योग्यता । 'वह्निना सिञ्चेत्' इति वाक्यं न योग्यम्, तत्र तात्पर्यविषयसंसर्गस्य बाधितत्वात् ।

आदित्यो यूप इत्यादावभेदसंसर्गस्य बाधेऽपि तस्य तात्पर्याविषयत्वात्, यूपप्राशस्त्यस्यैव तात्पर्यविषयत्वात्, तस्य चाबाधितत्वान्न योग्यताहानिः। 'तत्त्वमसि' 'सोऽयं देवदत्त' इत्यादौ वाच्यार्थाभेदस्य बाधेऽपि तात्पर्यविषयलक्ष्यार्थसंसर्गस्याबाधितत्वाद्योग्यतोपपत्तिः । अव्यवधानेन पदजन्यपदार्थोपस्थितिरासत्तिः । पदजन्यत्वविशेषणं च मानान्तरोपस्थापितानां बोधहेतुत्ववारणाय। द्वारमित्यादावपि पिधेहीत्यादिपदाध्याहारादेव बोधः॥

पदार्थो द्विविधः—शक्यो लक्ष्यश्चेति । तत्राद्यो मुख्यः । शक्यत्वं=शक्तिविषयत्वम् । शक्तिर्नाम पदानामर्थेषु मुख्या वृत्तिः । यथा गोपदस्य सास्नादिमति । सा च शक्तिः पदार्थान्तरं कार्यानुमेयेति च सिद्धान्तः । सा च शक्तिर्जातावेव । तद्भासकसामग्र्यैव व्यक्तिभानम्, लाघवात् । यद्वा व्यक्तावपि शक्तिः स्वीक्रियते । सा स्वरूपसती शाब्दबोधे कारणम्, जातिशक्तिस्तु ज्ञातेति भेदः । नीलादिपदादिव धर्मिभानं लक्षणयेति केचित् । द्वितीयोऽमुख्यः । लक्षणाविषयत्वं लक्ष्यत्वम् ॥

लक्षणा शक्यसंबन्धः । सा च द्विविधा—केवला लक्षितलक्षणा चेति । तत्र शक्यसाक्षात्संबन्ध आद्या । यथा गङ्गायां घोष इत्यादौ । तत्र शक्यार्थस्य प्रवाहादेः साक्षात्संबन्धस्य तीरादौ सत्त्वात् । यत्र परम्परासंबन्धस्तत्र द्वितीया । यथा द्विरेफादिपदे । तत्र स्ववाच्यरेफद्वयघटितपदवाच्यत्वादिपरम्पराया एव संबन्धत्वात् । गौणी तु नापरा वृत्तिः, किंतु लक्षितलक्षणैव । सिंहो माणवक इत्यादौ सिंहादिपदशक्यनिष्ठक्रौर्यादिसदृशक्रौर्यादिरूपपरम्परयैव तत्र बोधनिर्वाहात् ॥

लक्षणा पुनस्त्रिविधा जहल्लक्षणा अजहल्लक्षणा जहदजहल्लक्षणा चेति । यत्र शक्यमनन्तर्भाव्य पदार्थान्तरप्रतीतिः तत्राद्या । यथा शत्रुगृहे भोजनानुमतिं प्रार्थयन्तं प्रत्युत्तरं—'विषं भुङ्क्ष्व' इति । शत्रुगृहे भोजननिवृत्तिरभिमतार्थः। स्वार्थस्य भानं तु नास्त्येव । नीलमुत्पलमित्यादौ द्वितीया। तत्र वाच्यार्थं नीलरूपमपरित्यज्यैव तद्वति लक्षणाङ्गीकारात् । एवं काकेभ्यो दधि रक्ष्यतामित्यादावपि । तत्र काकाद्यपरित्यागेन दध्युपघातकमार्जारादेरपि बोधात् । सोऽयं देवदत्तः, तत्त्वमसीत्यादौ तृतीया। तत्राद्ये

तद्देशतत्कालविशिष्टत्वैतद्देशैतत्कालविशिष्टत्वयोः, द्वितीये सर्वज्ञत्वकिंचिज्ज्ञत्वयोश्च विरुद्धत्वात्तद्विशिष्टयोरभेदासंभवेनाविशेष्यमात्रपरत्वमुभयत्रापीति ॥

लक्षणाबीजं तात्पर्यानुपपत्तिरेव । काकेभ्यो दधि रक्ष्यतामित्यादौ व्यभिचारेणान्वयानुपपत्तेरसार्वत्रिकत्वात् ॥

वाक्येऽपि लक्षणाऽस्ति । गभीरायां नद्यां घोष इत्यत्र वाक्यस्य गभीरनदीतीरे लक्षणा । वाक्ये प्रत्येकशक्त्यभावेऽपि तद्घटकपदशक्त्यधीनप्रतीतिविषयरूपशक्यसंबन्धस्य तीरे सत्त्वान्नानुपपत्तिः । वाक्यार्थज्ञाने पदार्थज्ञानस्य तज्ज्ञाने शक्तिज्ञानस्य च हेतुतया शक्त्यधीनत्वं वाक्यजन्यप्रतीतेरुपपद्यते । स्तुत्यर्थवादवाक्यानां तेजो वै घृतमित्यादीनां प्राशस्त्ये, सोऽरोदीदित्यादिनिन्दार्थवादवाक्यानां कुत्सितत्वे च लक्षणा ॥

तात्पर्यं=तत्प्रतीतिजननयोग्यत्वं, तत्रावच्छेदिका शक्तिरेव । अस्मिन् मते सर्वत्र कारणतायां शक्तेरेवावच्छेदकत्वात् । तदन्यमात्रप्रतीतीच्छयाऽनुच्चरितत्वे सति तत्प्रतीतिजननयोग्यत्वं तात्पर्यमिति तु निष्कर्षः ॥

तात्पर्यग्रहश्च वेदे—

'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥'

इत्युक्तप्रकोरण मीमांसापरिशोधितन्यायात्, लोके प्रकरणादिना च भवति ॥

वेदानां सिद्धान्ते, न नैयायिकानामिव क्षणिकत्वं, न वा मीमांसकानामिव नित्यत्वम्, किंतु उत्पत्तिमत्त्वं, सृष्टिकाले ईश्वररचितत्वस्य 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद' इत्यादिश्रुतिसिद्धत्वात् । प्रलयकाले च तेषां वियदादीनामिव नाशः । एवं सति वेदस्य ईश्वरकृतत्वेनापौरुषेयत्वसिद्धान्तभङ्ग इति न शङ्कनीयम् । सजातीयोच्चारणानपेक्षोच्चारणविषयत्वस्यैव पौरुषेयत्वस्य विवक्षितत्वात् । सर्गाद्यकाले पूर्वसर्गसिद्धानुपूर्व्यैव वेदस्येश्वरेण रचनात्तादृशपौरुषेयत्वं तत्र नास्त्येव । भारतादिकं व्यासादिना स्वत एव कृतमिति तस्य सजातीयोच्चारणानपेक्षोच्चारणविषयत्वरूपपौरुषेयत्वमस्त्येव । एवंच पौरुषेयापौरुषेयभेदेनागमो द्विविध इति बोध्यम् ॥

॥ इत्यागमः ॥

## ॥ अथार्थापत्तिः ॥

उपपाद्यज्ञानेनोपपादककल्पनमर्थापत्तिः । तत्रोपपाद्यज्ञानं कारणम् उपपादकज्ञानं फलमिति विवेकः । पीनो देवदत्तो दिवा न भुङ्क्ते इत्याद्युदाहरणम् । येन विना यदनुपपन्नं तत्तत्रोपपाद्यम् । यथा रात्रौ भोजनं विना दिवा अभुञ्जानस्य पीनत्वमनुपपन्नमिति तदुपपाद्यम् । यस्याभावे यस्यानुपपत्तिः तत्तत्रोपपादकम् । यथा रात्रिभोजनाभावे दिवाऽभुञ्जानस्य पीनत्वमनुपपन्नमतो रात्रिभोजनमुपपादकम् ॥

अर्थस्यापत्तिः कल्पनमिति व्युत्पत्त्या फले, अर्थस्यापत्तिर्यस्मादिति व्युत्पत्त्या करणे चार्थापत्तिशब्दस्य प्रवृत्तिः । सा च दृष्टार्थापत्तिः श्रुतार्थापत्तिश्चेति द्विविधा । पुरोवर्तिरङ्गादिविषयकेदंरजतमितिज्ञानानन्तरं यत्र नेदं रजतमिति ज्ञानं जायते तत्राद्या । तत्र निषेध्यत्वमुपपाद्यम्, तच्च रजतस्य सत्यत्वे नोपपद्यत इति सद्भिन्नत्वरूपमिथ्यात्वमुपपादकम् । यत्र 'तरति शोकमात्मवित्' इति वेदवाक्यबोधितात्मज्ञाननिष्ठसंसाररूपशोकनिवर्तकत्वानुपपत्त्या संसारमिथ्यात्वकल्पनं तत्र द्वितीया । तत्र ज्ञानस्य संसारनिवर्तकत्वमुपपाद्यं, संसारमिथ्यात्वमुपपादकम् । एवमुदाहरणान्तराण्यप्यूह्यानि ॥

श्रुतार्थापत्तिर्द्विविधा— अभिधानानुपपत्तिमूला, अभिहितानुपपत्तिमूला चेति । तत्राभिधानं तात्पर्यम् । द्वारमित्याद्याद्योदाहरणम् । तत्र द्वारकर्मकपिधानबोधतात्पर्यमुपपाद्यं, पिधेहिपदाध्याहार उपपादकम् । तत्र तत्पदाध्याहारं विना तादृशबोधपरत्वानिर्वाहात् । ज्योतिष्टोमेन स्वर्गकामो यजेतेत्याद्यन्त्योदाहरणम् । तद्वाक्यात्तादृशयागस्य स्वर्गसाधनत्वमभिहितम् । तदुपपाद्यं, अपूर्वं विना नष्टो यागो बहुकालानन्तरभाविस्वर्गं जनयितुं नालमित्यपूर्वस्य कल्पकं भवेत् ॥

व्यतिरेकव्याप्तिज्ञानस्यानुमितिहेतुत्वानङ्गीकारात् अर्थापत्तेर्नानुमानेन गतार्थता । पृथिवी इतरेभ्यो भिद्यत इत्यादावितरभेदादेरर्थापत्त्यैव सिद्धिः । अत एव तत्र अनुव्यवसाय इतरभेदं कल्पयामीत्येव नानुमिनोमीति ॥

॥ इत्यर्थापत्तिः ॥

## ॥ अथानुपलब्धिः ॥

ज्ञानकरणाजन्याभावानुभवासाधारणकारणमनुपलब्धिप्रमाणम् । अदृष्टाद्यभावविधेयकानुमितिकरणेऽतिव्याप्तिवारणायाजन्यान्तम् । घटादिवारणाय विशेष्यभागः[1] । घटादिप्रत्यक्षमादाय चक्षुरादावतिप्रसङ्गवारणायाभावेति । साधारणकारणादृष्टादिवारणायासाधारणेति । अभावस्मृत्यसाधारणकारणसंस्कारवारणायानुभवेति । यदि च स्मृतावनुभवस्यैव करणत्वं संस्कारस्तु व्यापार एव तदाऽनुभवत्वेन निवेशो माऽस्तु । ज्ञानकरणजन्यत्वात् स्मृतेरजन्यान्तेनैव वारणात् ॥

योग्यानुपलब्धिरेवाभावग्राहिका । तत्र योग्या चासावनुपलब्धिश्चेति विग्रहः । अनुपलब्धौ योग्यत्वं प्रतियोगिसत्त्वव्यापकोपलम्भकत्वम् । इत्थं चालोकादिचाक्षुषकारणकलापवति भूतलादौ घटाद्यभावस्यानुपलब्धिगम्यत्वम् , एवं स्तम्भादौ पिशाचाद्यन्योन्याभावस्यानुपलब्धिगम्यत्वं चोपपद्यते । आत्मादावदृष्टादिविरहस्य पिशाचादौ स्तम्भादिभेदस्य चानुपलब्धिगम्यत्वस्य नेदानीमापत्तिः । अधिकरणादाविन्द्रियसन्निकर्षसत्त्वात्तद्ग्रहस्य इन्द्रियकरणकत्वेऽपि अभावेन इन्द्रियाणां सन्निकर्षाभावान्न तद्ग्रहस्य तत्करणकत्वम् । इन्द्रियाणामन्वयव्यतिरेकाभ्यामभावग्रहे अपेक्षितत्वेऽपि तेषामधिकरणादिप्रत्यक्षे उपक्षीणत्वात् अभावग्रहं प्रत्यन्यथासिद्धत्वमेव । प्रत्यक्षत्वं तु नेन्द्रियजन्यत्वव्याप्यं, दशमस्त्वमसीत्यादिवाक्यजन्ये प्रत्यक्षे व्यभिचारात् । तत्र यथा शब्दः करणम्, एवमभावप्रत्यक्षेऽनुपलब्धिरिति बोध्यम् । भूतले घटो नास्तीत्यभावानुभवस्थले वृत्तिनिर्गमावश्यंभावेन भूतलावच्छिन्नचैतन्यमिवाभावावच्छिन्नचैतन्यमपि प्रमात्रभिन्नमिति प्रत्यक्षत्वे समानेऽपि वृत्तिवैजात्यात् प्रमाणवैजात्यसिद्धिः । वृत्त्योस्त्विन्द्रियजन्यत्वतदजन्यत्वाभ्यां भेदः स्फुट एव । इत्थं चाभावप्रत्यक्षे सन्निकर्षाभावादिन्द्रियाणां न करणत्वम् । अनुपलब्धेस्तत्संभवाच्च प्रमाणान्तरत्वमुपगन्तव्यम् ॥

---

१. विशेष्यभागः=अभावानुभवेति भागः ॥

अभावश्चतुर्विधः—प्रागभावो ध्वंसोऽत्यन्ताभावोऽन्योन्याभावश्चेति । तत्र प्रथमः कारणे कार्योत्पत्तिपूर्वक्षणपर्यन्तं वर्तमानो भविष्यतीति प्रतीतिसाक्षिकोऽभावः । कार्योत्पत्तिक्षणे च तस्य नाशः । तत्रैव घटादेर्मुद्गरपाताद्यनन्तरं नष्ट इति प्रतीतिसाक्षिकोऽभावो द्वितीयः । सोऽपि स्वाधिकरणकपालादिनाशे नश्यत्येव, ब्रह्मातिरिक्तस्य सर्वस्याप्येतन्मतेऽनित्यत्वेन ध्वंसाधिकरणस्य नित्यत्वे कथमिति शङ्काया एव नावसरः । यत्र यस्य कालत्रयेऽप्यभावः स तृतीयः । यथा वाय्वादौ रूपादिकं नेति प्रतीतिविषयः । सोऽप्याकाशादिवद्विनाशी । घटो न पट इत्यादिप्रतीतिसिद्धश्चतुर्थोऽन्योन्याभावः । पृथक्त्वं विभाग इत्यादिशब्दैः व्यवह्रियमाणः स एव । भेदातिरिक्तविभागादौ प्रमाणाभावात् गौरवाच्च । अयं चाधिकरणस्य सादित्वे सादिः, तस्यानादित्वे अनादिः । यथा घटपटयोर्जीवब्रह्मणोश्च भेदः॥

स पुनर्द्विविधः—सोपाधिकनिरुपाधिकभेदात् । य उपाधिसत्तायामेव वर्तते स आद्यः । उपाधिसत्ताव्याप्यसत्ताक इति यावत् । यश्चोपाधिसत्ताधीनो न भेदः किं तु स्वतःसिद्धः स द्वितीयः । एकस्यैवाकाशस्य घटाद्युपाधिभेदाद्यो भेदः, एकस्य चन्द्रस्य जलभाजनभेदाद्यो भेदः, एकस्य ब्रह्मणः अन्तःकरणभेदाद्यो भेदः, तानि प्रथमस्योदाहरणानि । घटादौ पटादिभेदो द्वितीयोदाहरणम् ॥

॥ इत्यनुपलब्धिः ॥

---

## ॥ अथ प्रामाण्यवादः ॥

उक्तप्रमाणानां प्रामाण्यं स्वत एवोत्पद्यते ज्ञायते च । तथाहि । तद्वति तत्प्रकारकज्ञानत्वं प्रमात्वं स्मृत्यनुभवसाधारणम् । तत्र ज्ञानसामान्यसामग्री प्रयोजिका । अधिकस्य गुणस्य तत्र हेतुत्वं नाङ्गीक्रियते, अनुगतगुणस्य दुर्वचत्वात् । दोषाभावस्यापि प्रतिबन्धकाभावविधया प्रमायां कारणतया ज्ञानसामान्यसामग्र्याः भ्रमप्रमोभयसाधारण्येऽपि न भ्रमस्य

प्रमात्वापत्तिः । ज्ञानसामग्र्यनन्तर्गतभावकारणानपेक्षत्वस्यैव स्वतस्त्वा-द्दोषाभावस्याधिकस्य प्रमायां हेतुत्वेऽपि न तद्धानिः । दोषाभावे सति यावत्स्वाश्रयग्राहकसामग्रीग्राह्यत्वस्य स्वतोग्राह्यत्वरूपत्वान्न तस्यापि क्षतिः । साक्षिणा वृत्तिज्ञाने गृह्यमाणे तद्गतप्रामाण्यस्यापि तेनैव ग्रहणं संभवति । प्रामाण्यसंशयस्थले संशयानुरोधेन दोषस्याप्यावश्यकतया दोषाभावघटि-तायाः स्वाश्रयग्राहकसामग्र्या अभावेन तत्र प्रामाण्यग्रहस्यैवानुदयान्न तदनुपपत्तिः । यावत्स्वाश्रयग्राहकग्राह्यत्वयोग्यत्वं स्वतस्त्वमित्युच्यते । तस्य च संशयस्थलेऽपि सत्त्वान्न दोषः । परं तु संशयजनकदोषसमवधानेन प्रामाण्याग्रहान्न संशयानुपपत्तिरिति मन्तव्यम् । ज्ञानसामान्यसामग्री नाप्रामाण्ये प्रयोजिका, तथा सति प्रमाया अप्यप्रामाण्यापत्तेः, किन्तु दोषस्तत्प्रयोजकः । अप्रामाण्यघटकसकलपदार्थानां साक्षिणा ग्रहीतुमशक्य-तया न तस्य स्वतोग्राह्यत्वम् किन्त्वनुमानगम्यत्वमेव । एवं चाप्रामाण्यस्यो-त्पत्तिर्ज्ञानं च परत एव ॥

॥ इति प्रामाण्यवादः ॥

---

## ॥ अथ विषयनिरूपणम् ॥

उक्तप्रमाणानां प्रामाण्यं व्यावहारिकतत्त्वावेदकत्वपारमार्थिकतत्त्वा-वेदकत्वभेदेन द्विविधम् । तत्र ब्रह्मस्वरूपातिरिक्तविषयकाणां प्रथमम् । व्यवहारदशायामबाधितत्वं व्यावहारिकत्वम् । तच्च भूतभौतिकानां सर्वे-षामस्ति, तेषां व्यवहारदशायां कदाऽपि बाधाभावात् । जीवब्रह्मैक्यपराणां तत्त्वमसीत्यादीनां द्वितीयम् । कालत्रयेऽप्यबाधितत्वं पारमार्थिकत्वम् । तच्च महावाक्यार्थे जीवपरैक्ये अस्ति, तस्य कदाऽपि बाधाप्राप्तेः । तस्य चैक्यस्य ज्ञानं तत्त्वंपदार्थज्ञानादेव भवति । अतस्तत्पदार्थो लक्षणप्रमाणाभ्यां प्रथमं निरूप्यते ॥

स्वरूपतटस्थभेदेन लक्षणं द्विविधम् । तत्र स्वरूपमेव लक्षणं स्वरूपलक्षणं, यथा 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिश्रुतिबोधितं सत्यज्ञानादिकं ब्रह्मणो लक्षणम् । स्वरूपस्यापि कल्पनया धर्मत्वस्य संभवान्न लक्षणत्वहानिरिति बोध्यम् । तदुक्तम्—'आनन्दो विषयानुभवो नित्यत्वं चेति धर्माः अपृथक्त्वेऽपि चैतन्यात्पृथगिवावभासन्ते' इति । अयावल्लक्ष्यभावित्वे सति व्यावर्तकं तटस्थलक्षणम् । यथा गन्धवत्त्वादिकं पृथिव्यादेः । महाप्रलये परमाणुषु उत्पत्तिकाले घटादिषु च तदभावाद्व्यावर्तकत्वाच्च तथात्वम् ॥

ब्रह्मणश्च जगत्सृष्ट्यादिकर्तृत्वं तटस्थलक्षणम् । उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वं कर्तृत्वम् । ईश्वरस्य तत्सत्त्वे च 'यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते' 'सोऽकामयत बहु स्यां प्रजायेयेति' 'तन्मनोऽकुरुत' इत्यदिश्रुतयो मानम् । अत्र च जन्माद्यन्यतमस्यैव कार्यकोटौ ज्ञानाद्यन्यतमस्यैव कारणकोटौ च प्रवेशः, नतु जन्मादित्रयस्य ज्ञानादित्रयस्य च, प्रयोजनाभावात् । इत्थं च सृष्ट्यनुकूलज्ञानवत्त्वरूपस्रष्टृत्वादिरूपाणि नव लक्षणानि । ब्रह्मणः सृष्ट्यादिकर्तृत्वे च 'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति' इत्यादिश्रुतिर्मानम् ॥

यद्वा सकलकार्योपादानत्वं ब्रह्मलक्षणम् । तच्च जगदध्यासाधिष्ठानत्वं, जगदात्मना परिणममानमायाधिष्ठानत्वं वा । तादृशाध्यासे च 'इदं सर्वं यदयमात्मा' इत्याद्याः श्रुतयो मानम् । [1]घटादावस्ति भातीष्ट इति व्यवहारश्च तत्र जगद्ब्रह्मणोस्तादात्म्याध्यासेन ब्रह्मगतधर्माणां घटादौ भानात् । दुःखस्याप्यानन्दात्मकब्रह्माध्यासेऽपि न तत्रेष्टत्वव्यपदेशः । तथा प्रतीत्यभावेन तत्रानन्दांशाध्यासानङ्गीकारात् । [2]जगति नामरूपव्यपदेशः स्वपरिणाम्यविद्याधीनः । तदुक्तं पञ्चदश्याम्—

---

१. यथा अयो दहतीत्यादिव्यवहारेण अग्न्ययःपिण्डयोस्तादात्म्याध्यासेनाग्निगतधर्माणामयसि भानं तथेति बोध्यम् ॥

२. आरोपजनकदोषस्य फलमात्रोन्नेयत्वादिति भावः ॥

'अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् ।
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥' इति ॥

अथ जगत्सृष्टिप्रकारो निरूप्यते । सर्गाद्यकाले परमेश्वरः सृज्यमानप्रपञ्चवैचित्र्यहेतुप्राणिकर्मवासनासहकृतोऽपरिमितानिरूपितशक्तिविशेषविशिष्टमायासहितः सन् नामरूपात्मकनिखिलप्रपञ्चं यथापूर्वं बुद्धावाकलय्य इदं करिष्यामीति संकल्पयति । 'तदैक्षत बहु स्यां प्रजायेयेति' 'सोऽकामयत बहु स्यां प्रजायेयेति' इत्यादिश्रुतेः । स च संकल्पः मायावृत्तिरूपः सिसृक्षेत्युच्यते ॥

ततस्तमःप्रधानप्रकृतेः आकाशादीनि पञ्च भूतानि अपञ्चीकृतानि तन्मात्राभिधानि जायन्ते । तत्राकाशस्य शब्द एव गुणः । वायुतेजोजलभुवां क्रमाच्छब्दस्पर्शौ, शब्दस्पर्शरूपाणि, शब्दस्पर्शरूपरसाः, शब्दस्पर्शरूपरसगन्धाश्च गुणा बोध्याः । पञ्चानामपि भूतानामेकैको गुणः स्वाभाविकः, इतरे कारणगुणोत्पन्ना इति ध्येयम् ॥

इमानि च भूतानि सत्त्वरजस्तमोगुणकार्याणि । भूतानां सत्वांशैः क्रमाच्छ्रोत्रत्वगक्षिरसनघ्राणान्युत्पद्यन्ते । तैरेव मिलितैरन्तःकरणं जायते । अन्तःकरणस्यैव वृत्तयो मनोबुद्ध्यहंकारचित्तानि । श्रोत्रादीन्द्रियाणां दिग्वातार्कवरुणाश्विनोऽधिष्ठातारः । घ्राणस्य पृथिव्यधिष्ठातृदेवतेत्यन्ये । अन्तःकरणवृत्तीनां क्रमाच्चन्द्रब्रह्मरुद्रविष्णवो देवताः ॥

भूतानां रजोंशैः क्रमाद्वाक्पाणिपादपायूपस्थानि कर्मेन्द्रियाणि भवन्ति । वह्नीन्द्रोपेन्द्रमृत्युप्रजापतयः क्रमात्तेषामधिष्ठातृदेवताः । पायोर्मित्रो देवतेत्येके । भूतानां रजोंशैर्मिलितैः पञ्च वायवो जायन्ते । ते च प्राणापानव्यानोदानसमानसंज्ञा भवन्ति ॥

एभ्यः सूक्ष्मभूतेभ्यो महाभूतान्युत्पद्यन्ते । तान्येव पञ्चीकृतभूतान्युच्यन्ते । पञ्चीकरणं च—

'द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः ।
स्वस्वेतरद्वितीयांशैर्योजनात् पञ्च पञ्च ते ॥'

इत्युक्तप्रकारम् । पृथिव्यादावुक्तप्रकारेणेतरभूतांशसद्भावेऽपि पृथिव्याद्याधिक्येन तद्व्यवहारः, 'वैशेष्यात्तु तद्वादस्तद्वाद' इत्युक्तेः ॥

लोकान्तरयात्रानिर्वाहार्थं जीवानां सूक्ष्मशरीरमङ्गीक्रियते । तच्च—

'पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् ।
अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम् ॥'

इत्युक्तम् । तच्च जीवानां मोक्षपर्यन्तं तिष्ठति । तच्च लिङ्गशरीरं द्विविधम्—परमपरं चेति । हिरण्यगर्भलिङ्गशरीरं जीवलिङ्गसमष्टिरूपं तत्राद्यम् । तदेव महत्तत्त्वमित्युच्यते । अस्मदादिलिङ्गशरीरमन्त्यमहंकाराख्यम् ॥

पञ्चीकृतभूतेभ्यश्चतुर्दशभुवनानां तद्गतभोग्यादिनिखिलपदार्थानां चोत्पत्तिः । पञ्चतन्मात्रोत्पत्तौ लिङ्गशरीरोत्पत्तौ हिरण्यगर्भस्थूलशरीरोत्पत्तौ चेश्वरस्य साक्षात्, इतरप्रपञ्चोत्पत्तौ हिरण्यगर्भद्वारा कर्तृत्वं बोध्यम् । 'हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इति श्रुतेः । अयं च हिरण्यगर्भो मूर्तित्रयादन्यः प्रथमो जीवः । 'स वै शरीरी प्रथमः स वै पुरुष उच्यते । आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत ॥ हिरण्यगर्भः समवर्तताग्रे' इत्यादिश्रुतेः ॥

अथ प्रलयः । त्रैलोक्यनाशरूपप्रलयो नित्यप्राकृतनैमित्तिकात्यन्तिकभेदाच्चतुर्धा भवति ॥

तत्र प्रथमः सुषुप्तिः, तदा सर्वकार्याणां लयात् । धर्माधर्मपूर्वसंस्काराणां च तदा स्वस्वकारणात्मनाऽवस्थानादनन्तरं सुखादेः स्मृतेश्च नानुपपत्तिः । सुषुप्तिकालेऽन्तःकरणस्यापि लीनत्वाच्छ्वासोपलम्भो भ्रमः । यद्वाऽन्तःकरणस्य शक्त्योर्ज्ञानक्रियारूपयोः आद्याया एव तदानीं लयः, तेन प्राणाद्यवस्थाने न विरोधः ॥

कार्यब्रह्मनाशजन्यः सकलकार्यनाशो द्वितीयः । ब्रह्मणः स्वाधिकारनिर्वाहकप्रारब्धावसाने लब्धसाक्षात्कारैः स्वलोकनिवासिभिः सर्वैः सह मुक्तिः ।

'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥'

इति श्रुतेः । एवं ब्रह्मणि स्वलोकवासिभिः सह मुच्यमाने तदधिष्ठितब्रह्माण्डतदन्तर्गतसकललोकानां तदन्तर्वर्तिनिखिलभूतभौतिककार्याणां च प्रकृतौ मायात्मिकायां लयो न ब्रह्मणि । अत एवायं प्राकृतप्रलय इत्युच्यते ॥

कार्यब्रह्मणो दिवसावसानभवस्तृतीयः । तदा त्रैलोक्यस्यैव नाशः । ब्रह्मणो दिवसश्च 'चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते' इति वचनबोधितश्चतुर्युगसहस्रपरिमितः कालः । तावानेव रात्रिसमयः । रात्रिदिवसयोः परिमाणस्य तुल्यत्वात् । सा च रात्रिरुक्तप्रलयः ॥

ब्रह्मसाक्षात्कारजन्यः सर्वमोक्षश्चतुर्थः । स चैकजीववादे सर्वेषां युगपदेव, नानाजीववादे क्रमेण भवति । 'सर्व एकीभवन्ति' इति श्रुतेः । अयं चतुर्थः प्रलयः तत्त्वज्ञानमात्रसाध्यः । अन्ये त्रयोऽपि कर्मनाशाधीनाः ॥

प्रलये क्रमः सृष्टेर्विपरीतः । तथाच पृथिव्यादीनाम् अबादिषु क्रमाल्लयो बोध्यः । तथाच विष्णुपुराणे—

'जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते ।
तेजस्यापः प्रलीयन्ते तेजो वायौ प्रलीयते ॥

वायुश्च लीयते व्योम्नि तच्चाव्यक्ते प्रलीयते ।
अव्यक्तं पुरुषे ब्रह्मन्निष्कले च प्रलीयते ॥' इति ।

एतादृशप्रलयकर्तृत्वमपि तत्पदार्थब्रह्मणस्तटस्थलक्षणम् ॥

एवं सृष्ट्यादेः श्रुतिसिद्धत्वेऽपि न तस्य वास्तवत्वे श्रुतेस्तात्पर्यम्, अद्वैतव्याकोपात् । किं त्वद्वैतदार्ढ्यायैव श्रुत्यादिषु तद्वर्णनम् । तथाहि—सृष्ट्यादिकमनुक्त्वा ब्रह्मणि प्रपञ्चे निषिद्धे सति वाग्वादौ प्रतिषेध्यस्य रूपादेरिवान्यत्र प्रसिद्धिराशङ्क्येत । तथाचाद्वितीयत्वं न निश्चितं स्यात् । सृष्ट्यादिप्रतिपादने च ब्रह्मणः प्रपञ्चोपादानत्वनिश्चयादुपादानादन्यत्र कार्यस्य सत्त्वप्रसक्तेरभावाच्च तत्रापि नेति नेतीति प्रपञ्चनिषेधे सति तस्य मिथ्यात्वावगमादद्वैतमतिदृढं भवतीति । उपासनाकाण्डस्थसगुणवाक्यानां तदुपयोगिगुणारोपे निर्गुणस्थानां तेषां निषेधोपयोगिगुणबोधमात्रे तात्पर्यमिति न कस्यापि वचनस्याद्वैतप्रतिपादकवाक्येन विरोधः ॥

तत्पदार्थे ईश्वरो मायाप्रतिबिम्बः, अन्तःकरणप्रतिबिम्बा जीवा इत्येकः पक्षः । तत्र 'कार्योपाधिरयं जीवः कारणोपाधिरीश्वर' इति श्रुतिर्मानम् । अस्मिन् पक्षे जलाशयगतशरावगतसूर्यादिप्रतिबिम्बयोरिव जीवपरयोर्भेदः । उपाधेः प्रतिबिम्बपक्षपातितयोपाधिकृतदोषा ईश्वरेऽपि प्रसज्येरन्नित्यतः परमेश्वरो बिम्बभूतः, प्रतिबिम्बभूता जीवाः, बिम्बत्वप्रतिबिम्बत्वाभ्यामस्पृष्टं शुद्धं ब्रह्मेत्यपरं मतम् । बिम्बभूतमुखादेर्दर्पणादिप्रवेशाभाववदीश्वरस्यान्तःकरणाद्युपाध्यप्रवेशे तस्य सर्वान्तर्यामित्वं कथमिति नाशङ्कनीयम् । परिच्छिन्नबिम्बस्य उपाधिप्रदेशेऽभावेऽपि अपरिच्छिन्नबिम्बस्येश्वरस्य प्रतिबिम्बप्रदेशसंबन्धस्याबाधितत्वान्न तस्य सर्वान्तर्यामित्वस्य भङ्गः ॥

त्वंपदार्थश्चैकजीववादेऽविद्याप्रतिबिम्बितो जीवः, अनेके जीवा इति पक्षे अन्तःकरणप्रतिबिम्बितः । जीवस्य च जाग्रत्स्वप्नसुषुप्तय इति तिस्रोऽवस्थाः सन्ति । तत्रेन्द्रियजन्यज्ञानं यद्दशायामस्ति सा जाग्रदवस्था । तादृशज्ञानमन्तःकरणवृत्तिः ॥

सा चावरणभङ्गार्थेत्येके । तेषां मते अविद्योपाधिको जीव इति घटाद्यवच्छिन्नचैतन्यस्य जीवस्य चैक्यात्सर्वदा जीवस्य घटादिभानापत्त्या तद्वारणाय तदावारकं किंचिदज्ञानमङ्गीकृतम् । तच्च मूलाज्ञानपरतन्त्रम् । तस्यैवावस्थाज्ञानं तूलाज्ञानमिति वा नाम । एवं च तदज्ञानेनावृतत्वान्न घटादेः सर्वदा भानप्रसङ्गः । अनावृतचैतन्यस्यैव भासकत्वोपगमात् । आवरणभङ्गश्च वृत्त्येत्यवश्यमङ्गीकरणीयम् । आवरणस्य येन केनापि निवृत्त्यनङ्गीकारे घटादेर्भानं कदाऽपि न स्यात् । भासकस्य निवर्तकत्वासंभवान्न चैतन्यमात्रस्य तथात्वम् । सामान्यतो वृत्त्युपहितस्य निवर्तकत्वाङ्गीकारे परोक्षस्थलेऽपि तन्निवृत्तिः प्रसज्येत । तस्मादपरोक्षा वृत्तिस्तादृशवृत्तिविशिष्टचैतन्यं वा आवरणभङ्गहेतुरित्यावरणभङ्गार्था वृत्तिरित्येकं मतम् ॥

संबन्धार्था वृत्तिरिति पक्षान्तरम् । तत्राविद्योपाधिकस्य सर्वव्यापिनो जीवस्य घटादिप्रदेशे विद्यमानस्यापि अपरोक्षवृत्तिविरहदशायां न विषयावभासकत्वं तादृशवृत्तिदशायां विषयावभासकत्वं च दृश्यते इति

व्यङ्ग्यव्यञ्जकभावरूपसंबन्धविशेषस्यैव भाननिर्वाहकत्वस्य कादाचित्कवृत्तेरेव तत्प्रयोजकत्वस्य चाङ्गीकार आवश्यक इति वृत्तेः संबन्धार्थत्वम् । वृत्तेर्विषयावभासकसंबन्धप्रयोजकत्वं कथमिति चेदित्थम् । तैजसमन्तःकरणं स्वत एव स्वच्छत्वात् जीवचैतन्याभिव्यञ्जनसमर्थम् । घटादिकं त्वस्वच्छद्रव्यत्वान्न तथा, किन्तु वृत्तिसंयोगे सति चैतन्याभिव्यञ्जनसमर्थं भवति । उक्तं च विवरणे—'अन्तःकरणं हि स्वस्मिन्निव स्वसंसर्गिण्यपि घटादौ चैतन्याभिव्यक्तियोग्यतामापादयति' इति । स्वच्छद्रव्यसंबन्धादस्वच्छद्रव्यस्य प्रतिबिम्बग्रहणसामर्थ्यमनुभवसिद्धं च, यथा कुड्यादेर्जलादिसंबन्धात् । विषयस्य व्यञ्जकत्वं तत्प्रतिबिम्बग्राहित्वम् । चैतन्यस्य अभिव्यक्तत्वं तु प्रतिबिम्बितत्वामिति मन्तव्यम् । विषयस्योक्ताभिव्यञ्जकत्वसिद्ध्यर्थमेव प्रत्यक्षस्थले वृत्तेरिन्द्रियद्वारा बहिर्निर्गमनाङ्गीकारः । परोक्षस्थले विषये वृत्तिसंयोगाभावेन विषयस्य चैतन्यानभिव्यञ्जकतया न प्रत्यक्षत्वम् । विषयाणां चैतन्याभिव्यञ्जकत्वस्यैव तन्मते प्रत्यक्षत्वात् । जीवानामन्तःकरणोपाधिकतया परिच्छिन्नत्वामिति पक्षेऽपि वृत्तेः संबन्धार्थत्वमेव । तथाहि । जीवस्य परिच्छिन्नतया विषयदेशसंबन्धाभावेन विषयप्रत्यक्षासंभवात् तत्सिद्ध्यर्थं घटाद्यवच्छिन्नचैतन्यस्य प्रमातृचैतन्याभेदसिद्ध्यर्थं बहिर्वृत्तिरावश्यकीति वृत्तेः संबन्धार्थता । वृत्तिदशायां प्रमातृविषयचैतन्ययोरभेदप्रकारस्तु उपपादितोऽधस्तात् ॥

इन्द्रियाजन्यविषयगोचरापरोक्षान्तःकरणवृत्त्यवस्था स्वप्नावस्था । अविद्यागोचराविद्यावृत्त्यवस्था सुषुप्त्यवस्था ॥

अविद्याप्रतिबिम्बो जीव इत्येकजीववादिमतम् । अन्तःकरणप्रतिबिम्बा इति मते जीवा अनेके। उभयत्रापि जीवः स्वयंप्रकाशोऽनुभवरूपश्च । अत एव स्वप्नावस्थामधिकृत्य 'अत्रायं पुरुषः स्वयंज्योतिः' इति 'प्रज्ञानघन' इति च श्रुतिः । एवंविधो जीवस्त्वंपदार्थः ॥

तत्त्वमसीत्यादिवाक्यानि जीवपरयोरैक्यं वदन्ति । तस्य च नाहमीश्वर इति प्रत्यक्षेण, किंचिज्ज्ञत्वसर्वज्ञत्वादिविरुद्धधर्माश्रयत्वेन, 'द्वा सुपर्णा' इत्यादिश्रुत्या, 'द्वाविमौ पुरुषौ' इत्यादिस्मृत्या च सिद्धार्थविरुद्धत्वेऽपि उपक्रमादिना निर्णीतजीवपराद्वैततात्पर्यकमहावाक्यानां प्रबलतरप्रमाणत्वेन

तेषां गौणार्थकत्वकल्पनं न न्याय्यमिति तेषामैक्यरूपमुख्यार्थपरत्वमेव । अन्यथा चन्द्रादौ ज्योतिश्शास्त्रबोधितस्य प्रकृष्टमहत्परिमाणस्य स्वल्पपरिमाणग्राहिणा प्रत्यक्षेण बाधः प्रसज्येत । भेदवादस्तूपाधिकृतो भ्रान्तिकृतो वेति द्रष्टव्यम् । आरोप्यविषयसंस्कारस्यैवारोपप्रयोजकत्वात् प्रकृते च तादृशसंस्कारस्यानादितया कर्तृत्वाद्यध्यासे न काऽप्यनुपपत्तिरिति ध्येयम् । तत्त्वंपदशक्यविशिष्टार्थयोरभेदासंभवेऽपि तत्पदलक्ष्यार्थयोरैक्यं संभवत्येवेति प्रतिपादितमधस्तात् ॥

इत्थं च सर्वप्रमाणाविरुद्धं—

'आत्मानं चेद्विजानीयादहमस्मीति पूरुषः ।
किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत् ॥
तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥
जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चो यत्प्रकाशते ।
तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धात्प्रमुच्यते ॥
मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ।
मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम् ॥
यथा नदी नदो लोके सागरेणैकतामियात् ।
तद्वदात्माऽक्षरेणासौ निष्कलेनैकतामियात् ॥
यदस्थूलमनण्वाख्यमप्रमेयमवर्णकम् ।
तद्ब्रह्माहमिति ज्ञात्वा ब्रह्म संपद्यते ध्रुवम् ॥
सर्वभूतान्तरस्थाय नित्यशुद्धचिदात्मने ।
प्रत्यक्चैतन्यरूपाय मह्यमेव नमो नमः ॥'

इत्यादिश्रुतिपुराणस्मृत्यादितात्पर्यविषयीभूतं निरस्तसमस्तोपाधि जीवब्रह्मैक्यमेव वेदान्तशास्त्रस्य विषय इति सिद्धम् ॥

वेदान्तशास्त्रस्य प्रयोजनं परमपुरुषार्थः । स च मोक्षः । यज्ज्ञातं सत्स्ववृत्तितयेष्यते स पुरुषार्थः । मुख्यामुख्यभेदेन स द्विविधः । तत्र सुखदुःखाभावौ मुख्यौ, तदन्यतरसाधनममुख्यम् । सुखं द्विविधं—निरतिशयं सातिशयं चेति । तत्राद्यं ब्रह्मसुखमेव 'आनन्दो ब्रह्मेति व्यजानात्'

इत्यादिश्रुतेः । द्वितीयं विषयविशेषानुषङ्गजनितान्तःकरणवृत्तिविशेषाधीनं परस्परतारतम्योपेतं आनन्दवल्ल्यां प्रसिद्धमन्तःकरणवृत्तौ ब्रह्मानन्दप्रतिबिम्बरूपम्। 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुतेः ॥

दुःखनिवृत्तिसहितब्रह्मानन्दावाप्तिर्मोक्षः । स च तत्त्वज्ञानात् भवति । 'ब्रह्मविद्ब्रह्मैव भवति' 'तरति शोकमात्मवित्' इत्यादिश्रुतेः । तयोः सिद्धत्वेऽपि कण्ठगतस्य विस्मृतस्य मणेः प्राप्तस्यैवाप्तोपदेशात् अप्राप्तस्येव प्राप्तिर्यथा, यथा च मन्दान्धकारे रज्जौ सर्पत्वभ्रमवतो नायं सर्प इत्याप्तवचनात्सर्पनिवृत्त्या परिहृतस्यैव परिहारस्तथा तयोः प्राप्तिपरिहारौ ॥

स च मोक्षस्तत्वज्ञानैकफलम्, 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति श्रुतेः । अज्ञाननिवृत्तेर्ज्ञानमात्रसाध्यत्वादज्ञाननिवृत्तिमन्तरेणाज्ञानकार्यसंसारदुःखस्यानिवृत्तेरिति । तच्च ज्ञानं जीवपरैक्यविषयकम् 'अभयं वै जनक प्राप्तोऽसि, यदात्मानमेवावेदहं ब्रह्मास्मीति' इति श्रुतेः । तच्च ज्ञानं प्रत्यक्षरूपमेव निवर्त्यभ्रमस्य प्रत्यक्षरूपत्वात् परोक्षज्ञानेन तदनिवृत्तेः । तच्चापरोक्षं ज्ञानं तत्त्वमसीति वेदान्तवाक्यादित्येके । अपरे तु—प्रत्यक्षत्वे इन्द्रियजन्यत्वं प्रयोजकम् । नतु विषयविशेषः । अन्यथा करणविशेषाधीने प्रत्यक्षाप्रत्यक्षे कथमुपपद्येते । तेन ब्रह्मसाक्षात्कारे वाक्यं न करणम् । किंतु मननादिसंस्कृतं मन एव । मनसैवानुद्रष्टव्यमिति श्रुतेः । औपनिषदत्वोक्तिरुपनिषत्प्रयोज्यत्वनिबन्धनेति न तद्विरोधः । मनोगोचरत्वश्रुतिरप्यसंस्कृतमनोविषयेति न तस्या अपि विरोध इत्याहुः ॥

ज्ञानापरोक्ष्यं न करणविशेषाधीनम् । इन्द्रियजन्यत्वस्य प्रत्यक्षत्वव्यापकत्वे सुखादिप्रत्यक्षे व्यभिचारः । मनस इन्द्रियत्वाभावेन तादृशप्रत्यक्षे इन्द्रियजन्यत्वस्याभावात् । अतस्तत्त्वमस्यादिवाक्यमेव ब्रह्मापरोक्षकरणम् । प्रत्यक्षस्य करणविशेषानधीनत्वे एकस्मिन्नेव सूक्ष्मवस्तुनि पटुपटुकरणाभ्यां प्रत्यक्षतदभावौ कथमुपपद्येतामिति नाशङ्कनीयम्, प्रमाणचैतन्यस्य विषयचैतन्याभिन्नत्वस्यैव प्रत्यक्षत्वप्रयोजकतया प्रत्यक्षे चान्तःकरणस्य बहिर्निर्गमनावश्यंभावात् सूक्ष्मवस्तुन्यसमर्थेन्द्रियस्य सन्निकर्षाभावादन्तःकरणस्य बहिर्निर्गमनासंभवादुभयोपपत्तेः ॥

तस्मात्तत्त्वमसीत्यादिवाक्यमेव ब्रह्मात्मैक्यप्रत्यक्षकरणम्। 'तं त्वौपनिषदम्' इत्यादिश्रुतेः । 'मनसैवानुद्रष्टव्यः' 'दृश्यते त्वग्र्यया बुद्ध्या' इत्यादिश्रुतिश्च तस्य सहकारित्वमेव वदतीत्येव सिद्धान्तः ॥

पापक्षयोऽपि ज्ञाने हेतुः । तत्र च शुभं कर्म कारणमिति कर्मणां परम्परया ज्ञाने उपयोगः। 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति, यज्ञेन दानेन तपसाऽनाशकेन' इति श्रुतेः । 'कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते' इति स्मृतेश्च । कषायोऽत्र पापम् ॥

एवं श्रवणादिकमपि तत्त्वज्ञाने कारणं, मैत्रेयीब्राह्मणे तथा प्रतिपादनात् । श्रवणं नाम वेदान्तानामद्वितीये ब्रह्मणि तात्पर्यावधारणानुकूला मानसी क्रिया । मननं नाम शब्दावधारितेऽर्थे मानान्तरविरोधशङ्कायां तन्निराकरणानुकूलतर्कात्मकज्ञानजनको मानसो व्यापारः । निदिध्यासनं नामानादिदुर्वासनया विषयेष्वाकृष्यमाणस्य चित्तस्य विषयेभ्योऽपकृष्यात्मविषयकस्थैर्योपादनानुकूलो मानसो व्यापारः। ब्रह्मसाक्षात्कारे निदिध्यासनं मुख्यं कारणम् । 'ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्' इत्यादिश्रुतेः । निदिध्यासनं प्रति मननं कारणम् । तदभावेऽर्थदार्ढ्यासिद्ध्या निदिध्यासनस्यैवासिद्धेः । एवं मनने श्रवणं हेतुः । तेन विना तात्पर्यनिश्चयासंभवेन शाब्दबोधस्यैवानुदयाद्वेदान्तवाक्यार्थे मानान्तरविरोधशङ्कापरिहारानुकूलतर्कानुसंधानरूपमननासंभवात् । इत्थं च तत्त्वज्ञाने निदिध्यासनं, तत्र मननं, मनने च श्रवणं कारणमिति फलितम् ॥

केचित्तु श्रवणादित्रयमपि ज्ञाने स्वतन्त्रं कारणं, घटादिकं प्रति मृत्कुलालादिवदित्याहुः । अन्ये तु—तत्त्वज्ञाने श्रवणं मुख्यं कारणम् । मनननिदिध्यासने त्वङ्गे । अत्राङ्गमुख्यभावः प्राधान्याप्राधान्यरूपः । घटादिकार्ये मृदादीनां प्राधान्यं दण्डादेश्चाप्राधान्यमितिवदिति वदन्ति ॥

मुमुक्षुः श्रवणादावधिकारी । मुमुक्षायां च नित्यानित्यविवेक इहामुत्रार्थफलभोगविरागः शमदमोपरतितितिक्षासमाधानश्रद्धा उपयुज्यन्ते । अन्तरिन्द्रियनिग्रहः शमः। बहिरिन्द्रियनिग्रहो दमः। विक्षेपाभाव उपरतिः। शीतोष्णादिद्वन्द्वसहिष्णुत्वं तितिक्षा । चित्तैकाग्र्यं समाधानम् । गुरुवेदान्तवाक्यविश्वासः श्रद्धा । अत्रोपरमः संन्यासः । तेन संन्यासिनामेव

श्रवणादावधिकार इति केचित् । उपरमशब्दो न संन्यासे रूढः किंतु विक्षेपविरहार्थकः । तेन गृहस्थादीनामपि तत्राधिकारः । अत एव जनकादेरपि ब्रह्मविचारः श्रुतिप्रसिद्धः संगच्छते । तेन सर्वाश्रमिणामपि श्रवणादावधिकारस्तुल्य इत्यपरे ॥

सगुणोपासनस्य मोक्षे चित्तैकाग्र्यसंपादनद्वारा कारणत्वम् । उक्तं हि—

'निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः ।
ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः ॥' इति ।
'वशीकृते मनस्येषां सगुणब्रह्मशीलनात् ।
तदेवाविर्भवेत्साक्षादपेतोपाधिकल्पनम् ॥' इति ।

सगुणोपासका अर्चिरादिद्वारा ब्रह्मलोकं प्राप्य तत्र श्रवणाद्यनन्तरं ब्रह्मणा सह मुक्ता भवन्ति । काम्यकर्मकृतस्तु धूममार्गेण पितृलोकादिकं गत्वा तत्र कर्मफलस्य भोगेन क्षये कर्मशेषभोगाय पुनरिममेव लोकं प्राप्य विविधयोनिषु स्थावरजङ्गमरूपासु स्वस्वकर्मानुसारेण संसरन्ति । तथाच श्रूयते—'रमणीयचरणा रमणीयां योनिमापद्यन्ते, कपूयचरणाः कपूयां योनिम्' इति । तत्त्वज्ञानिनस्तु न लोकान्तरगमनं, 'न तस्य प्राणा उत्क्रामन्ति' इति श्रुतेः । ते पुनः प्रारब्धकर्मशेषं भोगेन क्षपयित्वा देहपातानन्तरं विदेहकैवल्यं प्राप्नुवन्ति ॥

'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये' इत्यादिश्रुत्या 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इति स्मृत्या च संचितकर्मणामेव ज्ञानेन क्षय इति सिद्धान्तः । संचितं कर्म सुकृतं दुष्कृतं चेति द्विविधम् । 'तस्य पुत्रा दायमुपयन्ति, सुहृदः साधुकृत्यां, द्विषन्तः पापकृत्याम्' इति श्रुतेः । प्रारब्धस्य कर्मणोऽज्ञाननिवृत्तौ प्रतिबन्धकत्वात् ज्ञाने सत्यपि यावत्प्रारब्धावस्थानं नाज्ञानस्य नाशः । अविद्याया एकत्वपक्षे तत्त्वज्ञानेन तस्या नाशे सर्वमुक्त्यापत्ताविष्टापत्तिरेव शरणम् । अत एव दोषादविद्याया नानात्वमन्येऽङ्गीकुर्वन्ति । अविद्यैकैव तस्या ब्रह्मस्वरूपावारिकाः शक्तयो नाना । एकस्य ज्ञाने सति तस्य ब्रह्मावारकशक्तेर्नाशात्तद्विशिष्टाविद्यानाशात्तस्य मोक्षेऽपि अन्येषां तादृशशक्तेरनाशान्न तेषां मोक्ष इति नैकमुक्तौ

सर्वमुक्तिप्रसङ्ग इत्यपरे । एकमुक्तौ सर्वमुक्तिरिति पक्षो न स्वरसः । बहूनां मुक्त्यनन्तरमपि लोकयात्रायाः पुराणादिषु प्रसिद्धत्वात् ॥

इत्थं च ब्रह्मज्ञानं मोक्षसाधनम् । स च मोक्षोऽनर्थनिवृत्तिसहिताखण्डनित्यनिरतिशयानन्दावाप्तिरूपो वेदान्तशास्त्रस्य प्रयोजनमिति सिद्धम् । इति शिवम् ॥

प्रसादादेव भवतो निश्चित्याहं भवानिति ।
सर्वमेतज्जगदपि न बिभेमि कुतश्चन ॥

॥ इति श्रीरामवर्माख्यगोश्रीमहाराजर्षिकृतः
वेदान्तपरिभाषासंग्रहः समाप्तः ॥

